गुडतैलेन वा लीढा पीता मद्येन वा पुनः ।
बुभुक्षाप्रभवे शूले लघु सन्तर्पणं हितं ॥
उष्णैः चीरैर्यवागूभिः स्निग्धैर्मांसरसैस्तथा ।
वातशूले समुत्पन्ने रूक्षं स्निग्धेन योजयेत् ॥
सुसंस्कृताः प्रदेयाः स्युर्घृतपूरा विशेषतः ।
वारुणीञ्च पिबेज्जन्तुस्तया सम्पद्यते सुखी ॥
एतद्वातसमुत्थस्य शूलस्योक्तं चिकित्सितं ।
अथ पित्तसमुत्थस्य क्रियां वक्ष्याम्यतः परं ।
स सुखं छर्दयित्वा तु पीत्वा शीतोदकं नरः ॥
शीतलानि च सेवेत सर्व्वाण्युष्णानि वर्ज्जयेत् ।
मणिराजततायाणि भाजनानि च सर्व्वशः ॥
वारिपूर्णानि तान्यस्य शूलस्योपरि निक्षिपेत् ।
गुडशालियवाः चीरं सर्पिः पानं विरेचनं ॥
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनां ।
रसान्सेवेत पित्तघ्नान् पित्तलानि विवर्ज्जयेत् ॥
पालाशं धान्वनं वापि पिबेद्यूषं सशर्करं ।
परूषकाणि मृद्वीकाखर्ज्जूरोदकशान्यपि ॥
तत्पिबेच्छर्करायुक्तं पित्तशूलनिवारणं ॥
अशने भुक्तमात्रे तु प्रकोपः श्लैष्मिकस्य च ॥
वमनं कारयेत्तत्र पिप्पलीवारिणा भिषक् ।
रूचः स्वेदः प्रयोज्यः स्यादन्याश्चोष्णाः क्रिया हिताः ॥

पिप्पलीश्टङ्गवेरञ्च श्लेष्मशूले भिषग्जितं ।
पाठां वचां त्रिकटुकं तथाच कटुकरोहिणीं ॥
चित्रकस्य च निर्यूहं पिबेद्यूषं समाक्षिकं ।
एरण्डफलमूलानि मूलं गोक्षुरकस्य च ॥
शालपर्णीं पृश्निपर्णीं वृहतीं कण्टकारिकां ।
दद्याच्छृगालविन्नाञ्च सहदेवां तथैव च ॥
महासहां क्षुद्रसहां मूलञ्चेक्षुरकस्य च ।
एतत्सम्भृत्य सम्भारं जलद्रोणे विपाचयेत ॥
चतुर्भागावशेषन्तु यवक्षारयुतं पिबेत् ॥
वातिकं पैत्तिकं वापि श्लैष्मिकं सान्निपातिकं ।
प्रसह्य नाशयेच्छूलं छिन्नाभ्रमिव मारुतः ॥
पिप्पल्यः स्वर्ज्जिकाक्षारो यवाग्रिजक एव च ।
सैन्धवञ्च समानीय भस्म कुर्य्याद्विचक्षणः ॥
तदुष्णवारिणा पीतं श्लेष्मशूले भिषग्जितं ।
रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः ॥
स संरुद्धः करोत्याशु ध्मानं गुडुगुडायनं ।
सूचीभिरिव निस्तोदः कृच्छ्रोच्छ्वासो तदा नरः ॥
नान्नं वाञ्छति नो निद्रामुपैत्यर्त्तिनिपीड़ितः ।
पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः ॥
तत्र पुष्करमूलानि हिंगुसौवर्चलं विड़ं ।
सैन्धवं तुम्बुरुपथ्याचूर्णं कृत्वा तु पाययेत् ॥

पार्श्वहृदवस्तिशूलेषु यवक्काथेन संयुतं ।
सर्पि क्षीरोदरोक्तं वा घृतं वा हिंगुसंयुतं ॥
वीजपूरकसारं वा पयसा सह साधितं ।
एरण्डतैलमथ वा मद्यमस्तुपयोरसैः ॥
भोजयेच्चापि पयसा जाङ्गलेन रसेन वा ।
प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः ॥
तदास्य भोजनं भुक्तं सोपस्तम्भं न पच्यते ।
उच्छ्वसित्यामशङ्कता शूलेनाहन्यते मुहुः ॥
नैवासने न शयने तिष्ठन्न लभते सुखं ।
कुक्षिशूल इतिख्यातो वातादामसमुद्भवः ॥
वमनं कारयेत्तत्र लङ्घयेद्वा यथाबलं ।
संसर्गपाचनं कुर्य्याद्दृव्यैर्दीपनसंयुतैः ॥
नागरं दीप्यकं चव्यं हिंगुसौवर्चलं विडं ।
मातुलुङ्गाच्च वीजानि तथा श्यामोरुवूकयोः ॥
वृहत्याः कण्टकार्य्याश्च क्वाथं शूलहरं पिवेत् ।
वचा सौवर्चलं हिंगु कुष्ठं सातिविषाभया ॥
कुटजस्य च वीजानि सद्यः शूलहराणि तु ।
विरेचनं प्रयुञ्जीत ज्ञात्वा दोषवलावलं ॥
स्नेहवस्तीन्निरूहांश्च कुर्य्याद्दीपनिवर्द्धनं ।
उपनाहाः स्नेहसेकाः धान्याम्लपरिषेचनं ।
कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः ॥

हृदिस्थः कुरुते शूलमुच्छ्वासरोधकं पर-
स हृच्छूल इतिख्यातो रसमारुतसम्भवः
तत्रापि कर्माभिहितं यदुक्तं हृद्विकारिणा-
संरोधात्कुपितो वायुर्वस्तिमावृत्य तिष्ठति ॥
वस्तिवंक्षणनाभीषु ततः शूलोऽस्य जायते।
विण्मूत्रवातसंरोधी वस्तिशूलः स मारुतात् ॥
नाभ्यां वंक्षणपार्श्वेषु कुक्षौ मेढ्रान्तमर्द्दकः ।
मूत्रमाहृत्य गृह्णाति मूत्रशूलः समारुतात् ॥
वायुः प्रकुपितो यस्य रूक्षाहारस्य देहिनः ।
मलं रुणद्धि कोष्ठस्थं मन्दीकृत्य तु पावकं ॥
शूलं सञ्जनयंस्तीव्रं स्रोतांस्याहृत्य तस्य हि ।
दक्षिणं यदि वा वामं कुक्षिमादाय जायते ॥
सर्व्वत्र वर्द्धते क्षिप्रं शूलं तत्र सघोषवत् ।
पिपासा वर्द्धते तीव्रा भ्रमो मूर्च्छा च जायते ॥
उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति ।
विट्शूलमेतज्जानीयाद्धिषक्परमदारुणं ॥
क्षिप्रं दोषहरं कार्य्यं भिषजा साधु जानता ।
स्वेदनं वमनञ्चैव निरूहाः स्नेहवस्तयः ॥
पूर्व्वोद्दिष्टान्पाययेत योगान् कोष्ठविशोधनान् ।
उदावर्त्तहरायाश्च क्रियाः सर्व्वाः सुखावहाः ॥
अतिमात्रं यदा भुक्तं पावके मृदुतां गते ।

स्थिरीभूतं तु तत्कोष्ठे वायुराहत्य तिष्ठति ॥
अविपाकगतं चान्नं शूलं तीव्रं करोत्यति ।
मूर्च्छाध्मानं विदाहश्च हृदुत्क्लेशो विलम्बिका ॥
विरिच्यते छर्दयति कम्पतेऽथ विमुह्यति ।
क्षाराश्चूर्णानि गुटिकाः शस्यन्ते शूलनाशनाः ॥
गुल्मावस्थाः क्रियाः कार्या यथावत्सर्वशूलिनां ।

---

॥ त्रिचत्वारिंशत्तमोऽध्यायः ॥

अथातो हृद्रोगप्रतिषेधं व्याख्यास्यामः ॥
वेगाघातोष्णरूक्षान्नैरतिमात्रोपसेवितैः ।
विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥
दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
कुर्वन्ति हृदये बाधां हृद्रोगं तं प्रचक्षते ॥
चतुर्विधः स दोषैस्तु पञ्चमः क्रिमिभिस्तथा ।
पृथग्लिङ्गं प्रवक्ष्यामि चिकित्सितमनन्तरं ॥
आयम्यते मारुतजे हृदयं तुद्यते तथा ।
निर्मथ्यते दीर्यते च स्फोट्यते पाट्यतेऽपि च ॥
तृष्णोषादाहचोषाः स्युः पैत्तिके हृदयक्लमः ।
धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥
गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवं ।
माधुर्यमपि चास्यस्य बलासावतते हृदि ॥

उत्क्लेशः ष्ठीवनं तोदः शूलो हृल्लासकस्तमः।
अरुचिः श्यावनेत्रत्वं शोषश्च कृमिजे भवेत्॥
भ्रमक्लमौ सादशोषौ ज्ञेयास्तेषामुपद्रवाः।
कृमिजे कृमिजातीनां श्लेष्मिकीणाञ्च ये मताः॥
वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरं।
द्विपञ्चमूलक्काथेन सस्नेहलवणेन तु॥
पिप्पल्येलावचाहिंगुयवभस्मानि सैन्धवं॥
सौवर्चलमथो शुण्ठीमजमोदाञ्च चूर्णितं।
फलधान्याम्लकौलत्थदधिमद्यासवादिभिः॥
पाययेत विशुद्धञ्च स्नेहेनान्यतमेन वा।
भोजयेज्जीर्णशाल्यन्नं जाङ्गलैः सघृतैरसैः॥
वातघ्नसिद्धं तैलञ्च दद्याद्वस्तिं प्रमाणतः।
श्रीपर्णीमधुकक्षौद्रशीतोपलजलैर्वमेत्।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतं॥
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान्।
ह्रस्वस्य च रसैर्मुख्यैर्जाङ्गलैः सघृतैर्भिषक्॥
सक्षौद्रं वितरेद्वस्तिं तैलं मधुकसाधितं।
वचानिम्बकषायाभ्यां वान्तं हृदि कफात्मके।
चूर्णन्तु पाययेतोक्तं वातजे भोजयेच्च तं।
फलादिमथ मुस्तादिं त्रिफलां वा पिबेन्नरः॥
श्यामाद्यत्कल्कयुतं घृतं वापि विरेचनं।

बलातैलैर्विदध्याच्च वस्तिं वस्तिविशारदः ।
क्रिमिघ्नद्रोगिणं स्निग्धं भोजयेत्पिशितौदनं ॥
दध्ना वा पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ।
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ॥
विडङ्गगाढैर्धान्याम्लं पाययेतायनन्तरं ।
हृदयस्थाः पतन्त्येवमधस्तात्क्रिमयो नृणां ॥
यवान्नं वितरेच्चास्य सविडङ्गमतः परं ।

---

॥ चतुश्चत्वारिंशत्तमोऽध्यायः ॥

अथातः पाण्डुरोगप्रतिषेधं व्याख्यास्यामः ॥

व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णं ।
निषेवमाणस्य विदूष्य रक्तं कुर्वन्ति दोषास्त्वचि पाण्डुभावं ॥
पाण्ड्वामयोऽष्टार्द्धविधः प्रदिष्टः पृथक् समस्तैर्युगपच्च दोषैः ।
सर्व्वेषु चैतेष्विह पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः ॥
त्वक्स्फोटनं ष्ठीवनगात्रसादौ मृद्भक्षणं प्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥
सकामलापानकिपाण्डुरोगः कुम्भाह्वयो लाघरकोऽलसाख्यः ।
विभाष्यते लक्षणमस्य कृत्स्नं विबोध वक्ष्याम्यनुपूर्व्वशस्तत् ॥
कृष्णेक्षणं कृष्णसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च ।
वातेन पाण्डुं मनुजं व्यवस्येद्युक्तं तथान्यैस्तदुपद्रवैश्च ॥
पीतेक्षणं पीतसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च ।

पित्तेन पाण्डुं मनुजं ज्वरेणैवयुक्तं तथान्यैस्तदुपद्रवैश्च ॥
शुक्लेक्षणं शुक्लसिरावनद्धं तद्वर्णविण्मूत्रनखाननञ्च ।
कफेन पाण्डुं मनुजं ज्वरेणैवयुक्तं तथान्यैस्तदुपद्रवैश्च ॥
सर्वात्मके सर्व्वमिदं ज्वरेणैवक्ष्यामि लिङ्गान्यथ कामलाय : ।
यो ह्यामयान्ते सहसाम्लमम्लमद्यादपथ्यानि च तस्य पित्तं ॥
करोति पाण्डुं वदनं विशेषात्तन्द्राबलं प्रथमोदितांश्च ॥
भेदस्तु तस्याः खलु कुम्भसाह्वं शोफो महांस्तत्र च पर्व्वभेदः ।
ज्वराङ्गमर्दभ्रमसादतन्द्राक्षयान्वितो लाघरकोऽलसाख्यः ॥
*तं वातपित्तात्मिभरीतलिङ्गं हलीमकं नाम वदन्ति तज्ज्ञाः ।*
उपद्रवास्तेष्वरुचि: पिपासा छर्दिर्ज्वरो मूर्द्धरुजाग्निसादः ॥
शोफस्तथा कण्ठगतोऽबलत्वं मूर्च्छा क्लमो हृदयपीडनञ्च ।
साध्यन्तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धं ॥
सम्पादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णयुतैः प्रयोगैः ।
पिबेद्घृतं वा रजनीविपक्वं यत्रैफलं तैल्वकमेव वापि ॥
विरेचनद्रव्यकृतं पिबेद्धि योगांश्च वैरेचनिकान् घृतेन ।
मूत्रे निकुम्भार्द्धपलं विपाच्य पिबेदभीक्ष्णं कुडवार्द्धमात्रं ।
खादेद्गुडं वाभयाविमिश्रमारग्वधादिक्वथितं पिबेद्वा ॥
अयोरजोव्योषविडङ्गचूर्णं लिह्याद्धरिद्रां त्रिफलान्वितां वा ।
सर्प्पिर्मधुभ्यां विदधीत वापि शास्त्रप्रदिष्टानभिहितांश्च योगान् ॥
हरेच्च दोषान् बहुशोऽल्पमात्रान् अयोह्वि दोषेष्वतिनिर्हृतेषु ।
धात्रीफलानां रसमिक्षुजञ्च मन्थं पिबेत् क्षौद्रयुतं हिताशी ॥

उभे बृहत्यौ रजनी शुकाख्यां शाकादनीं चापि सकाकमाचीं।
आदाग्नि बिम्बीं सकदम्बपुष्पीं विपाच्य सर्पिर्विपचेत्कषाये ॥
तत्पाण्डुतां हन्त्युपयुज्यमानं क्षीरेण वा मार्गधिका यथाग्नि।
हितश्च यष्टीमधुकं कषायं चूर्णं समं वा मधुनावलिह्यात् ॥
गोमूत्रयुक्तं त्रिफलादलानां दद्यायसञ्चूर्णमनल्पकालं।
प्रवालमुक्ताञ्जनशङ्खचूर्णं लिह्यात्तथा काञ्चनगैरिकोत्थं॥
आजं शकृदा कुडवप्रमाणं विडं हरिद्रालवणोत्तमञ्च।
पृथक्पलांशानि समग्रमेतच्चूर्णं हिताशी मधुनावलिह्यात्॥
मण्डूरलोहाग्निविडङ्गपथ्यायोषांशकः सर्व्वसमानताप्यः।
मूत्रासुतोऽयं मधुनावलेहः पाण्ड्वामयं हन्त्यचिरेण घोरं।
बिभीतकायोमलनागराणां चूर्णं तिलानाञ्च गुडस्य मुख्यः।
तक्रानुपानो वटकाप्रयुक्तः क्षिणोति घोरानपि पाण्डुरोगान्॥
सावर्चलं हिङ्गु किराततिक्तकलायमात्राणि सुखाम्बुना वा।
मूर्व्वाहरिद्रामलकञ्च लिह्यात्स्थितं गवां सप्त दिनानि मूत्रे।
मूलं बलाचित्रकयोः पिबेद्वा पाण्ड्वामयार्त्तोऽचमसं हिताशी॥
सुखाम्बुना वा लवणेन तुल्यं शिग्रोःफलं क्षीरभुगोपयोज्यं।
न्यग्रोधवर्गस्य पिबेत् कषायं शीतं सिताक्षौद्रयुतं हिताशी॥
मालादिकं चाप्ययसारचूर्णं धात्रीफलं वा मधुनावलिह्यात्॥
विडङ्गमुस्तत्रिफलाजमोदपाठ्यकव्योषविनिर्द्दहन्त्यः।
चूर्णीकृता वा गुडशर्करे च तथैव सर्पिर्मधुनी शुभे च॥
समारमेतदपि चेन्निधाय क्षारोदके क्षारवतो गणस्य।

जातञ्च लेह्यं मतिमान्विदित्वा निधापयेन्मोचकजे समुद्रे ॥
हन्त्येष लेहः खलु पाण्डुरोगं सशोथमुग्रामपि कामलाञ्च ।
सशर्करा कामलिनां त्रिभण्डी हिता गवाक्षी सगुडा च शुण्ठी ॥
कालेयकेचापि घृतं विपक्कं हितं च तत्स्याद्रजनीविमिश्रं ।
धातुं नदीजं जतुशैलजं वा कुम्भाह्वये मूत्रयुतं पिबेद्वा ॥
मुत्रस्थितं सैन्धवसम्प्रयुक्तं मासं पिबेद्वापि हि लोहकिट्टं ।
दग्ध्वाक्षकाष्ठैर्मलमायसंवा गोमूत्रनिर्व्वापितमष्टवारान् ॥
विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्यात् ।
सिन्धूद्भवं चाग्निसमं च कृत्वा क्षिप्त्वा च मूत्रे सकृदेव तप्तं ॥
लोहस्य किट्टं बहुशश्च तप्तं निर्व्वाप्य मूत्रे बहुशस्तथैव ।
एकीकृतं गोजलपिष्टमेतदेकध्यमावाप्य पचेद्गुखायां ॥'
यथा न दह्येत तथा विशुष्कं चूर्णीकृतं पेयमुदश्विता तत् ।
तक्रौदनाशी विजयेत रोगं पाण्डुं तथा दीपयतेऽनलञ्च ॥
द्राक्षागुडूच्यामलकीरसेन सिद्धं घृतं साधरके हितञ्च ।
गौडानरिष्टान्मधुशर्करांश्च मूत्रासवान् चारकृतांस्तथैव ।
स्निग्धान् रसानामलकैरुपेतान् कोलान्वितान् वापिहि जाङ्गलानां॥
सेवेत शेफाभिहितांश्च योगान् पाण्ड्वामयी शालियवांश्च नित्यं ॥
श्वासातिसारारुचिकासमूर्च्छातृष्टछर्दिशूलज्वरशोफदाहान् ।
तथा विपाकस्वरभेदसादान् जयेद्यथास्वम्प्रसमीक्ष्य शास्त्रं ॥
अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशूनं ।

गुदेऽथ शेफस्यथ मुष्कयोश्च शूलं प्रताम्यन्तमसंज्ञकल्पं ॥
विवर्ज्जयेत्पाण्डुकिनं यशोऽर्थी तथातीसारज्वरपीडितञ्च ।

॥ पञ्चचत्वारिंशत्तमोऽध्यायः ॥

अथातो रक्तपित्तप्रषेधं व्याख्यास्यामः ॥
क्रोधशोकभयायासविरुद्धान्नातपानलान् ।
कट्वम्ललवणक्षारतीक्ष्णोष्णातिविदाहिनः ॥
नित्यमभ्यसतो दुष्टो रसः पित्तञ्च कोपयेत् ।
विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितं ॥
ततः प्रवर्त्तते रक्तमूर्द्ध्वञ्चाधो द्विधापि वा ।
आमाशयाद्व्रजेदूर्द्ध्वमधः पक्वाशयाद्व्रजेत् ।
विदग्धयोर्द्वयोश्चापि द्विधाभागं प्रवर्त्तते ।
केचित्तु यकृतः प्लीह्नः प्रवदन्त्यसृजो गतिं ॥
ऊर्द्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतं ।
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ॥
लोहगन्धिश्च निश्वासो भवत्यस्मिन्भविष्यति ।
वाह्यादन्नचयैस्तस्य सह्याद्दोषाकृतीर्विदुः ॥
दौर्ब्बल्यश्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्च्छाः
भुक्ते चान्ने विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।
तृष्णा कण्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च ॥

देशे भक्तेऽविपाको विरतिरपि रते रक्तपित्तोपसर्गाः ॥
मांसप्रक्षालनाभं क्वथितमिव च यत्कर्द्दमाम्भोनिभं वा
मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभं।
यत्कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकाराः
तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥
नादौ संग्राह्यमुद्रिक्तं यदस्रं बलिनो यतः।
तत्पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहं ॥
अधः प्रवृत्तं वमनैरूर्द्ध्वमार्गं विरेचनैः।
जयेदन्यतरच्चापि क्षीणस्य शमनैरसृक् ॥
अतिप्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणं ॥
लङ्घितस्य ततः पेयां विदध्यात्स्वल्पतण्डुलां।
तर्प्पणं पाचनं लेहान् सर्प्पींषि विविधानि च ॥
द्राक्षामधुककाश्मर्य्यसितायुक्तं विरेचनं।
यष्टीमधुकयुक्तं च सक्षौद्रं वमनं हितं ॥
पयांसि शीतानि रसाश्च जाङ्गलाः सतीनयूषाश्च सशालिषष्टिकाः।
पटोलशेलुसुनिषण्णयूथिकावटातिमुक्ताङ्कुरसिन्दुवारजं ॥
हितश्च शाकं घृतसंस्कृतं सदा तथैव धात्रीफलदाडिमान्वितं।
रसाश्च पारावतशल्लकूर्मजास्तथा यवाश्चोऽभिहिता घृतोत्तराः ॥
मस्तानिकाद्योत्पलवर्गसाधिते क्षीरे प्रशस्ता मधुशर्करोत्तमाः।
हिमाः प्रदेहा मधुशर्कराश्च ये घृतानि पथ्यानि च रक्तपित्तिनां ॥

मधूकशोभाञ्जनकोविदारजैः प्रियङ्गुकायाः कुसुमैश्च चूर्णितैः ।
भिषग्विदध्याच्चतुरः समाक्षिकान् हिताय लेहानसृजः प्रशान्तये ।
लिह्याच्च दूर्व्वावटजांश्च पल्लवान्मधुद्वितीयान् सितकर्णिकस्य च ।
हितञ्च खर्ज्जूरफलं समाक्षिकं फलानि चान्यान्यपि तद्गुणान्यथ ॥

रक्तातिसारप्रोक्तांश्च योगानत्रापि योजयेत् ।
शुक्लेक्षुकाण्डमापोथ्य नवे कुम्भे हिमाम्भसा ॥
योजयित्वा क्षिपेद्रात्रावाकाशे सोत्पलन्तु तत् ।
प्रातः स्रुतं क्षौद्रयुतं पिबेच्छोणितपित्तवान् ॥
पिबेच्छीतकषायं वा जम्ब्वाम्रार्ज्जुनसम्भवं ।
उडुम्बरफलं पिष्ट्वा पिबेत्तद्रसमेव वा ॥
त्रपुषीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ।
पिबेदक्षसमं कल्कं यष्टीमधुकमेव वा ॥
चन्दनं मधुकं रोध्रमेवमेवं समं पिबेत् ।
करञ्जवीजमेवं वा सिताक्षौद्रयुतं पिबेत् ॥
सम्भानमिदद्गुखर्वं पिबेन्मधुकसंयुतं ।
सुखोष्णं लवणं वीजं कारञ्जन्दधिमस्तुना ॥
पिबेद्वापि त्र्यहं मर्त्यो रक्तपित्ताभिपीडितः ।
रक्तपित्तहराः शस्ताः षडेते योगसत्तमाः ॥
पथ्याश्चैवावपीडेषु घ्राणतः प्रस्रुतेऽसृजि ।
अतिनिम्रुतरक्तो वा क्षौद्रयुक्तं पिबेदसृक् ॥
यक्ष्मदा भक्षयेदाशमासं पित्तसमायुतं ।

पलाशवृन्तस्वरसे विपक्वं सर्पिः पिबेत्क्षौद्रयुतं सुशीतं ॥
वनस्पतीनां स्वरसैः शृतं वा सशर्करं क्षीरघृतं पिबेद्वा ।
द्राक्षामधुकोशीराष्टर्य पद्मकं सिता पृथक्पलांशान्युदके समावपेत् ।
स्थितं निशान्तद्रुधिरामयं जयेत्पीतं पयो वाम्बुसमं हिताशिनः ॥
तुरङ्गवर्चःस्वरसं समाक्षिकं पिबेत्त्रिशाक्षौद्रयुतं वृषस्य वा ।
लिह्यात्तथा वास्तुकबीजचूर्णं क्षौद्रान्वितं तण्डुलसाह्वयं वा ॥
लिह्याच्च लाजाञ्जनचूर्णमेकमेवं सिताक्षौद्रयुतां तुगाख्यां ।
द्राक्षां सितां तिक्तकरोहिणीञ्च हिमाम्बुना वा मधुकेन युक्तां ।
पथ्यामहिंस्रां रजनीं घृतञ्च लिह्यात्तथा शोणितपित्तरोगी ॥
वासाकषायोत्पलमृत्प्रियङ्गुनेत्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु ॥
गायत्रिजम्ब्वर्जुनकोविदारशिरीषरोध्राशनशाल्मलीनां ।
पुष्पाणि शिग्रोश्च विचूर्ण्य लेह्यो मध्वन्वितः शोणितपित्तरोगे ॥
सक्षौद्रमिन्दीवरभस्म वारि करञ्जबीजं मधुसर्पिषी च ।
जम्ब्वर्जुनाम्रक्वथितञ्च तोयं घ्नन्ति त्रयः पित्तमसृक् योगाः ।
मूलानि पुष्पाणि च मातुलुङ्ग्याः पिष्ट्वा पिबेत्तण्डुलधावनेन ॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा ।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करञ्चेक्षुरसं हिमं वा ॥
शीतोपचारं मधुरञ्च कुर्याद्विशेषतः शोणितपित्तरोगे ।
द्राक्षाघृतक्षौद्रसितायुतेन विदारिगन्धादिविपाचितेन ॥
क्षीरेणचास्थापनमग्र्यमुक्तं हितं घृतञ्चाप्यनुवासनार्थं ॥

प्रियङ्गुरोध्राञ्जनगैरिकोत्पलैः सुवर्णकालीयकपद्मचन्दनैः।
सितास्वगन्धाम्बुदयष्टिकाह्वयैर्मृणालसौगन्धिकतुल्यपेषितैः॥
निरूह्य चैनं पयसा समाक्षिकैर्घृतप्लुतैः शीतजलावसेचितं।
क्षीरौदनं भुक्तमथानुवासयेद्घृतेन यष्टीमधुसाधितेन च॥
अधोवहं शोणितमाशु नाशयेत्तथातिसारं रुधिरस्य दुस्तरं।
विरेकयोगेनतिचैव शस्यते वाम्यिश्च रक्ते विजिते बलान्वितः॥
एवं विधा उत्तरवस्तयश्च मूत्राशयस्थे रुधिरे विधेयाः।
मद्वत्तरक्तेषु च पायुजेषु कुर्य्याद्विधानं खलु रक्तपित्तं॥
विधिश्चासृग्दरेऽप्येष स्त्रीणां कार्य्यो विजानता।
शस्तकर्म्मणि रक्तं वा यस्यातीव प्रवर्त्तते॥
त्रयाणामपि दोषाणां शोणितस्य च सर्व्वशः।
लिङ्गान्यालोक्य कर्त्तव्यं चिकित्सितमनन्तरं॥

---

॥ षट्चत्वारिंशत्तमोऽध्यायः॥

अथातो मूर्च्छाप्रतिषेधं व्याख्यास्यामः।
क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः॥
विघातादभिघाताद्वा हीनसत्वस्य वा पुनः।
करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च॥
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः।
हृत्पीडाजृम्भणं ग्लानिः संज्ञानाशो बलस्य च॥
सर्व्वासां पूर्व्वरूपाणि यथास्वमुपलक्षयेत्।

संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत्॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्।
मोहो मूर्च्छेति तां प्राहुःषड्विधा सा प्रकीर्त्तिता॥
वातादिभिः शोणितेन मद्येनच विषेणच।
षट्स्वपि तासु पित्तं हि प्रभुत्वेनावतिष्ठते॥
पृथिव्यम्बुस्तमोरूपं रक्तगन्धश्च तन्मयः।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति।
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः॥
तएव तस्माज्जायन्ते ताभ्यांमोहा यथेरिताः।
स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः॥
मद्येन विलपन् शेते नष्टविभ्रान्तमानसः।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत्॥
वेपथुस्वप्नतृष्णाः स्युः तमश्च विषमूर्च्छिते।
वेदितव्यन्तीव्रतरं यथास्वं विषलक्षणैः॥
सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च।
शीतानि पानानिच गन्धवन्ति सर्व्वासु मूर्च्छास्वनिवारितानि॥
सिताप्रियालेक्षुरसप्लुतानि द्राक्षामधूकस्वरसान्वितानि।
खर्ज्जूरकाश्मर्य्यरसैः शृतानि पानानि सर्व्वाणि सजीरकानि॥
सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च।

॥ सप्तचत्वारिंशत्तमोऽध्यायः ॥

अथातः पानात्ययप्रतिषेधं व्याख्यास्यामः ॥

मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च ।
रूक्षमाशुकरञ्चैव व्यवायि च विकाशि च ॥
औष्ण्याच्छीतोपचारं तत्तैक्ष्ण्याद्धन्ति मनोगतिं ।
विशत्यवयवान् सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत् ॥
मारुतं कोपयेद्रौक्ष्यादाशुत्वादाशुकर्मकृत् ।
हर्षदञ्च व्यवायित्वाद्विकाशित्वाद्विसर्पति ॥
तदम्लं रसतः प्रोक्तं लघु रोचनदीपनं ।
केचिल्लवणवर्ज्ज्यांस्तु रसानत्रादिशन्ति हि ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितं ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ।
काम्यता मनसस्तुष्टिर्धैर्य्यं तेजोऽतिविक्रमः ॥
विधिवत्सेव्यमाने तु मद्ये सन्निहिता गुणाः ।
तदेवानन्नमन्नेन सेव्यमानममात्रया ॥
कायाग्निनाह्यग्निसमं समेत्य कुरुते मदं ।
मदेन करणानान्तु भावान्यत्वे कृते सति ॥
निगूढमपि भावं स्वम्प्रकाशीकुरुतेऽवशः ।
व्यवस्थया मदो ज्ञेयः पूर्व्वो मध्योऽथ पश्चिमः ॥
पूर्व्वे वीर्य्यरतिप्रीतिहर्षभाष्यादिवर्द्धनं ।
प्रलापो मध्यमे हर्षो युक्तायुक्तक्रियास्तथा ॥

विषंज्ञः पश्चिमे शेते नष्टकर्म्मक्रियागुणः ।
श्लैष्मिकानल्पपित्तांश्च स्निग्धान्माचोपसेविनः ॥
पानं न बाधतेऽत्यर्थं विपरीतांस्तु बाधते ।

निर्भक्तमेकान्ततएव मद्यं निषेव्यमाणं मनुजेन नित्यं ।
उत्पादयेत् कष्टतमान्विकारानापादयेच्चापि शरीरभेदं ॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥
अत्यम्लभक्ष्यावततोदरेण साजीर्णभुक्तेन तथाबलेन ।
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् ॥

पानात्ययं परमदम्पानाजीर्णमथापि वा ।
पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणं ॥
स्तम्भाङ्गमर्द्दहृदयग्रहतोदकम्पाः
पानात्ययेऽनिलकृते शिरसो रुजश्च ।
स्वेदप्रलापमुखशोषणदाहमूर्च्छाः
पित्तात्मके वदनलोचनपीतता च ॥
श्लेष्मात्मके वमथुशीतकफप्रसेकाः
सर्व्वात्मके भवति सर्व्वविकारसम्पत् ।
उष्मा शरीरगुरुता विरसाननत्वं
श्लेष्माधिकत्वमरुचिर्म्मलमूत्रसङ्गः ॥
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा
स्तृष्णारुजा शिरसि सन्धिषु चापि भेदः ।

आध्मानमुद्गिरणमम्लरसो विदाहो
जीर्णस्य पानजनितस्य वदन्ति लिङ्गं॥
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि।
तृट्दाहतोदवमथुज्वरकण्ठधूम
मूर्च्छातिसारवणमूर्द्धरुजो विदाहः॥
द्वेष सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः।
हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमतिपानहतं विजह्यात्॥
जिह्वौष्ठदन्तमसितं त्वथवापि नीलं
पीते च यस्य नयने रुधिरप्रभे च।
हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते॥
तेषां निवारणमिदं हि मयोच्यमानं
व्यक्ताभिधानमखिलेन विधिं निबोध।
मद्यन्तु चुक्रमरिचार्द्रकदीप्यकुष्ठ
सौवर्चलायुतमलं पवनस्य शान्त्यै॥
पृथ्वीकदीप्यकमहौषधहिङ्गुभिर्वा
सौवर्चलेन च युतं वितरेत्सुखाय।
आम्रातकाम्लफलदाडिममातुलुङ्गैः

कुर्य्याच्छुभान्यपि च षाडवपानकानि ॥
सेवेत वा फलरसोपहितान्यषाढी
मानूपवर्गपिशितान्यपि गन्धवन्ति ।
पित्तात्मके मधुरवर्गकषायमिश्रं
मद्यं हितं ससधुशर्करमिष्टगन्धं ॥
पीत्वा च मद्यमपि चेक्षुरसप्रगाढं
निःशेषतः क्षणमवस्थितमुल्लिखेच्च ।
लावैणतित्तिरिरसांश्च पिबेदनम्लान्
मौद्गान्सुखाय सघृतान्सवितांश्च यूषान् ॥
पानात्यये कफकृते कफमुल्लिखेच्च
मद्येन विल्वविदुलोदकसंयुतेन ।
सेवेत तिक्तकटुकांश्च रसानुदारान्
यूषांश्च तिक्तकटुकोपहितान् हिताय ॥
पथ्यं यवान्न विकृतान्यपि जाङ्गलानि
श्लेष्मघ्नमन्यदपि यच्च निरत्ययं स्यात् ।
कुर्य्याच्च सर्व्वमथ सर्व्वभवे विधानं
द्वन्द्वोद्भवे द्वयमवेक्ष्य यथा प्रधानं ॥
सामान्यमन्यदपि यत्सुखमत्ययघ्नं
वक्ष्यामि यच्च मनसो मदकृत्सुखञ्च ।
त्वङ्नागपुष्पमगधैलमधूकधान्यैः
सच्छेरजाजिमरिचैश्च कृतं समांशैः ॥

पानं कपित्थरसवारिपरूषकाढ्यं
पानात्ययेषु विधिवत्कृतमम्बरान्ते ।
ह्रीवेरपद्मपरिपेलवसंप्रयुक्तैः
पुष्पैः प्रलिप्य करवीरजलोद्भवैश्च ॥
पिष्टैः सपद्मकयुतैरपि सारिवाद्यैः
सेकं जलैश्च विलेपदमलैः सुशीतैः ।
लक् पत्रचोचमरिचैलभुजङ्गपुष्प
श्लेष्मातकप्रसवकल्कगुडैरुपेतं ॥
द्राक्षायुतं कृतमलं मदिरामयार्त्ते
स्त्वानकं शुचि सुगन्धिमरैर्निषेव्यं ।
पिष्ट्वा पिबेच्च मधुकं कटुरोहिणीञ्च
द्राक्षाञ्च मूलमथकत् चपुषीभवं यत् ॥
कर्प्पासमूलमथ नागबलाञ्च तुल्यां
पीत्वा सुखी भवति साधु सुवर्चलाञ्च ।
काश्मर्यदारुविडदाडिमपिप्पलीषु
द्राक्षान्वितासु कृतमम्बुनि पानकं यत् ॥
तद्बीजपूरकरसायुतमाशु पीतं
शान्तिं परां मदगदेष्वचिरात्करोति ।
द्राक्षासितामधुकजीरकधान्यकृष्णा
खेदं कृतं दहतया च पिबेत्तथापि ॥
सौवर्चलायुतमुदाररसं फलाम्ल

भार्गीश्रृतेन च जलेन हिताबसेकः ।
इक्षुधामार्गवहृचकानि काकङ्कयोडुम्बरिकाश्च दुग्धे ।
विपाच्य तत्राञ्जलिना वमेद्धि मद्यं पिबेदक्षि गते लजीर्णे ॥
त्वक्पिप्पलीभुजगपुष्पविडङ्गपेतं
सेवेत हिङ्गुमरिचैलयुतं फलाम्बं ।
उष्णाम्बुसैन्धवयुतास्त्वथ वा विडत्वक्
पथ्येलहिङ्गुमगधाफलमूलशुण्ठीः ॥
हृद्यैः खडैरपि च भोजनमत्र शस्तं
द्राक्षाकपित्थफलदाडिमपानकं यत्।
तत्पानविभ्रमहरं मधुशर्कराढ्य
माम्रातकोलरसपानकमेव वापि ॥
खर्जूरवेत्रककरीरपरूषकेषु
द्राक्षाटरूषच कृतं सघृतं हितं वा ।
श्रीपर्णियुक्तमथ वा तु पिबेद्धिमानि
पथ्याङ्कयोत्पलहिमाम्बुविमिश्रितानि ॥
क्षीरिमवालबिसजीरकनागपुष्प
पत्रैलवालुशिलशारिवपद्मकानि ।
आम्रातमव्यकरमर्द्दकपित्थकोल
इक्षाम्लवेत्रफलजीरकदाडिमानि ॥
सेवेत वा मरिचजीरकनागपुष्प
त्वक्पत्रविश्वविकैलयुताबसांश्च ।

सूक्ष्माम्बरश्रुतहिमांश्च सुगन्धिगन्धान्।
पानोद्भवान्नुदति सप्तगदानशेषान्॥
पञ्चेन्द्रियार्थविषया मृदुपानयोगा
ह्वद्याः सुखाश्च मनसः सततन्निषेव्याः।
पानात्ययेषु विकटोरुनितम्बवत्य.
पीनोन्नतस्तनभरा नतमध्यदेशाः॥
प्रौढा,स्त्रियोऽभिनवयौवनपीनगात्र्यः
सेव्याश्च पञ्चविषयातिशयस्वभावाः।

पिवेद्रसं पुष्पफलोद्भवं वा सितामधूकत्रिसुगन्धियुक्तं।
• संचूर्ण्य संयोज्य च नागपुष्परजाजिकृष्णामरिचैश्च तुल्यैः॥
वर्षाभुयष्ट्याह्नमधूकबालकर्बुदाराङ्कुरजीरकाणि।
द्राक्षाश्च कृष्णामथ केशरञ्च क्षीरे समालोड्य पिवेत्सुखोष्णं॥
भवेच्च मद्येन तु येन पातितः प्रकामपीतेन सुरासवादिना।
तदेव तस्मै विधिवत्प्रदापयेद्विपर्ययेभ्रंशमवौ च गच्छति॥
यथानरेन्द्रोपहतस्य कस्यचिद्भवेत्प्रसादस्तत एव नान्यतः।

विच्छिन्नमद्य. सहसा योऽतिमद्यं निषेवते।
तस्य पानात्ययोद्दिष्टा विकाराः सम्भवन्ति हि॥
मद्यस्याग्नेयवायव्यौ गुणावम्बुवहानि च।
स्रोतांसि शोषयेयातां तेन तृष्णा प्रजायते॥
पाटलोत्पलकन्देषु मुद्गपर्ण्या च साधितं॥
पिवेन्मागधिकामिश्रं तत्ताम्रोद्दिमशीतलं।

सर्पिस्तैलवसामज्जदधि भृङ्गरसैर्युतं ॥
क्वाथेन विल्वयवयोः सर्वगन्धैश्च पेषितैः ।
पक्वमभ्यञ्जने श्रेष्ठं सेके क्वाथः सुशीतलः ॥
रसवन्ति च भोज्यानि यथास्वमवचारयेत् ।
पानकानि सुशीतानि हृद्यानि सुरभीणि च ॥
स्वच्चं प्राप्तस्तु पानोष्मा पित्तरक्ताभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजं ॥
शीतं विधानमत ऊर्द्धमहं प्रवक्ष्ये
दाहप्रशान्तिकरमृद्धिमतां नराणां ।
तत्रादितो मलयजेन हितः प्रदेह
श्चन्द्रांशुहारतुहिनोदकशीतलेन ।
शीताम्बुशीतलतरेच शयानमेवं
हारैर्मृणालवलयैरबलाः स्पृशेयुः ॥
भिन्नोत्पलोज्ज्वलहिमे शयने शयीत
पत्रेषु वा सजलविन्दुषु पद्मिनीनां ।
आसादयन्पवनमाहृतमिष्टगन्ध
कह्लारपद्मदलशैवलसंश्रयेभ्यः ॥
शीतैर्व्यजनान्तपवनैः परिस्पृश्यमानः
शीतश्च रेद्रुवनकाननदीर्घिकासु ।
दाहाभिभूतमथ वा परिषेचयेत्तु
शीतैरुशीरजलचन्दनवारिभिस्तं ॥

विश्राविता घृतमला नववारिपूर्णा
पद्मोत्पलोज्ज्वलजलामधिवासिताश्च ।
वापीभजेत हरिचन्दनभूषिताङ्गः
कान्ताकरस्पर्शकंकशरोमकूपः ॥
तत्रैनमम्बुरुहपत्रसमैः सुखस्पर्शैः
शीतैःकरोरुवदनैः कठिनैःस्तनैश्च ।
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबला मधुरैः प्रलापैः ॥
धारागृहे प्रगलितोदकदुर्दिनाभे
क्लान्तः शयीत सलिलानिलशीतकुक्षौ ।
गन्धोदकैः सकुसुमैरुपसिक्तभूमौ
पद्माम्बुचन्दनरसैरुपलिप्तकुड्ये ॥
मांसीतमालघनकुङ्कुमपद्मपत्र-
जात्युत्पलप्रियककेशरपुण्डरीके ।
पुन्नागनागकरवीरहृतोपकारे
तस्मिन्गृहे कमलरेणुहृते शयीत ॥
यत्राहतानिलविकम्पितपुष्पदाम्नि
हेमन्तविन्ध्यहिमवन्मलयाचलानां ।
शीताम्भसां सकदलीहरितद्रुमाणां
उद्भिन्ननीलनलिनाम्बुरुहाकराणां ॥
चन्द्रोदयस्य च कथाः शृणुयान्मनोज्ञा

स्थानं सुदीनमनसं मनसोऽनुकूलाः ।
पीनस्तनोरुजघना घनसारदिग्धाः
ता एवमार्द्रवसनाः सह संविशेयुः ॥
स्निग्धावलाः शिथिलमेखलहारयष्ट्यः ॥
हर्षयेयुःपुनर्नार्यः स्वगुणैरहवि स्थिताः ।
ताः शैत्याच्छमयेयुश्च पित्तपानात्ययं स्त्रियः ।
रक्तपित्तज्वरादाहेष्वयमेव विधिः स्मृतः ॥
सामान्यतो विशेषन्तु शृणुदाहेष्वशेषतः ।
छत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुव‌ंति ॥
संचूष्यते दह्यते च ताम्राभस्ताम्रलोचनः ।
लोहगन्धाङ्गवदनो वह्निनेवावकीर्य्यते ॥
तं विहृद्य विधानेन संदष्टाहारमाचरेत् ।
अप्रशाम्यति दाहे च रसैस्तृनस्य जाङ्गलैः ॥
शाखाश्रया यथान्यायं रोहिणीर्व्यधयेत्सिराः ।
पित्तज्वरसमः पित्तात्स चाप्यस्य विधिर्हितः ॥
तृष्णानिरोधादब्धातौ क्षीणे तेजः समुत्थितं ।
स वाह्याभ्यन्तरं देहं दहेदै मन्दचेतसः ॥
संशुष्कगलताल्वोष्ठो जिह्वां निःक्षिप्य वेपते ।
तत्रोपशमयेत्तेजस्तस्यातुस्व विवर्द्धयेत् ॥
पाययेत्काममम्भश्च शर्कराढ्यं पयोऽपिवा ।
शीतमिक्षुरसं मन्यं वितरेच्चेरितं विधिं ॥

अस्त्रजा पूर्वोक्तस्य दाहोऽन्यः स्यात्सुदुस्तरः।
विधिः सद्योव्रणीयोक्तस्तस्य लक्षणमेव च॥
धातुक्षयोक्तो यो दाहस्तेन मूर्च्छा तृषान्वितः।
क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः॥
रक्तपित्तविधिस्तस्य हितः स्निग्धोऽनिलापहः।
सन्तेजनास्ततश्चान्यः शोचतीवाप्यनेकधा॥
तेनान्तर्दह्यतेऽत्यर्थं तृष्णामूर्च्छाप्रलापवान्।
तमिष्टविषयोपेतं सुहृद्भिरपि संवृतं॥
क्षीरमांसरसाहारं विधिनोक्तेन साधयेत्।
मर्म्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः॥
सर्व्वएव च वर्ज्याःस्युः शीतगात्रेषु देहिषु।
एवं विधो भवेद्यस्तु मदिरामदपीडितः॥
प्रशान्तोपद्रवश्चापि शोधनं प्राप्नमाचरेत्।
सशीरकाख्यार्द्रकदृङ्गवेरसौवर्चलान्यर्द्धजलप्लुतानि।
मद्यानि ह्यान्यथ गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णां॥
जलप्लुतश्चन्दनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशां।
पिबन्सुरां नैव लभेत रोगान् मनोमतिघ्नश्च मदं न याति॥

॥ अष्टचत्वारिंशत्तमोऽध्यायः॥

अथातस्तृष्णाप्रतिषेधमध्यायं व्याख्यास्यामः॥
सततं यः पिबेद्वारि न तृप्तिमधिगच्छति।

पुनःकाङ्क्षति तोयञ्च तं तृष्णार्दितमादिशेत् ॥
संक्षोभशोकश्रममद्यपानाद्रुक्षाम्लशुष्कोष्णकटूपयोगात् ।
धातुक्षयग्लानसूर्य्यतापात् पित्तञ्च वातञ्च भृशं प्रवृद्धौ ।
स्रोतांसि संदूषयतः समेतौ यान्यम्बुवाहीनि शरीरिणां हि ।
स्रोतःस्वपांवाहिषु दूषितेषु जायेत तृष्णा प्रबला ततस्तु ।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा च ।
स्यात्सप्तमी भक्तनिमित्तजा तु लिङ्गानि तासां शृणु चौषधानि ॥
ताल्वोष्ठकण्ठास्यविशोषदाहाः सन्तापमोहभ्रमविप्रलापाः ।
पूर्व्वाणि रूपाणि भवन्ति तासामुत्पत्तिकालेषु विशेषतो हि ।
शुष्कास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरोगलेषु ।
स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ।
मूर्च्छाप्रलापारुचिवक्त्रशोषाः पीतेक्षणत्वं सततञ्च दाहः ॥
शीताभिकाङ्क्षा मुखतिक्तता च पित्तात्मिकायां परिधूमनञ्च ।
वाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णाबलासेन भवेत्तु तत्र ॥
निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रं ।
शीतज्वरच्छर्द्दिररोचकश्च कफात्मिकायां त्वचि पाकएव ॥
एतानि रूपाणि भवन्ति यस्यास्तयार्दितः काङ्क्षति नाति चाम्भः ।
घतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु ॥
तयाभिभूतस्य निशादिनानि गच्छन्ति दुःखं पिबतोऽपितोयं ।
रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु ॥
पेपीयतेऽम्भः स सुखन्न याति तां सन्निपातादिति केचिदाहुः ।

रसचयोक्तानिच लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् ॥
त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ता ।
स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्व्वन्नमेवाशु तृषां करोति ॥
क्षीणं विचित्तं वधिरं तृषार्त्तं विवर्ज्जयेन्निर्गतजिह्वमाशु ।
तृष्णाभिभूतस्त्ववुदरेच पूर्व्वं तं वामयेन्मागधिकोदकेन ॥
विलेपनं चात्र हितं वदन्ति स्याद्दाडिमाम्रातकमातुलुङ्गैः ।
तृष्णा प्रयोगैरिह सा निवार्य्या शीतैश्च सम्यग्रसवीर्य्यजातैः ॥
गण्डूषमम्लैर्व्विरसे च वक्त्रे कुर्य्यात्तथैवामलकस्य चूर्णैः ।
सुवर्णरूप्यादिभिरग्नितप्तैर्लोष्टैः श्रुतं वा सिकतोपलैर्व्वा ॥
जलं सुखोष्णं शमयेत्तु तृष्णां सशर्करं चौद्रयुतं हिमं वा ।
पञ्चाङ्गिकाः पञ्चगणा यउक्तास्तेष्वम्बुसिद्धं प्रथमे गणेवा ॥
पिवेत्सुखोष्णं मनुजोऽल्पशस्तु तृषो विमुच्येत हि वातजायाः ।
पित्तघ्नवर्गेण श्रुतः कषाय सशर्करः चौद्रयुतः सुशीतः ॥
पीतस्तृषां पित्तकृतान्निहन्ति क्षीरं शृतं वाप्यथ जीवनीयैः ।
विल्वाढकीकण्टकपञ्चमूलोदर्भेषु सिद्धं कफजान्निहन्ति ॥
हितं भवेच्छर्द्दनमेवचात्र तप्तेन निम्बप्रसवोदकेन ।
सर्व्वासु तृष्णास्वथवापि पैत्तं कुर्य्याद्विधिस्तेन विना न शान्तिः ॥
पर्य्यागतोडुम्बरजो रसस्तु सशर्करस्तत्कथितोदकं वा ।
वंगस्य सिद्धस्य च सारिवादे. पातव्यमम्भ. शिशिरं तृषार्त्तैः ।
कषेरुशृङ्गाटकपद्ममोचविशेषु सिद्धं चतजान्निहन्ति ॥
नीलोत्पलोशीरकुचन्दनानि दत्वा प्रवाते निशि वासयेत्तु ।

तदुत्तमं तोयमुदारगन्धि सितायुतं चाद्रयुतन्तथैव।,
द्राक्षाप्रगाढञ्च हिताय वैद्य तृष्णार्दितेभ्यो वितरेन्नरेभ्य. ॥
सभारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे च।
कुर्य्यात्कषायञ्च यथैव युक्तं मधूकपुष्पादिषु वापरेषु॥
राजादनक्षीरिकपीतनेषु षट्पानकान्यत्र हितानि च स्युः।
सतुण्डिकेरोण्यथवा पिबेत्तु पिष्टानि कार्पाससमुद्भवानि ॥
क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः।
क्षयोत्थितां क्षीरघृतं निहन्यान्मांसोदकं वा मधुकोदकं वा ॥
आमोद्भवां बिल्ववचायुतानां जयेत्कषायैरथ दीपनानां।
आम्रातभल्लातवलायुतानि पिबेत्कषायाण्यथ दीपनानि॥
गुर्वन्नजातां वमनैर्जयेच्च क्षयादृते सर्व्वकृताश्च तृष्णाः।
अमोद्भवां मांसरसो निहन्ति गुडोदकं वाप्यथवापि मन्थ ॥
भक्तोपरोधात्तृषितो यवागूमुष्णां पिबेन्मन्थमथो हिमं च।
या स्नेहपीतस्य भवेच्च तृष्णा तन्नोष्णमम्भः प्रपिबेन्मनुष्य. ॥
मद्योद्भवामर्द्धजलं निहन्ति मद्यं तृषां चापिहि मद्यपस्य।
उष्णोद्भवां हन्ति जलं सुशीतं सशर्करं चेक्षुरसं तथाम्भ. ।
स्वे. स्वे. कषायैर्व्वमनानि तासां तथा ज्वरोक्तानिच पाचनानि।
लेपावगाहौ परिषेचनानि कुर्य्यात्तथा शीतगृहाणि चापि॥
संशोधनं क्षीररसौ घृतानि सर्व्वासु लेहान्मधुरान् हिमांश्च ॥

---

॥ एकोनपञ्चाशत्तमोऽध्यायः ॥

अथातश्छर्दिप्रतिषेधमध्यायं व्याख्यास्यामः ॥

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि।
अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः ॥
श्रमात् भयात्तथोद्वेगादजीर्णात्कृमिदोषतः।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात्।
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः।
दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गतः ॥
ऊर्द्ध्वमागच्छति भृशं विरुद्धाहारसेविनां।
हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ॥
द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणं।

मरुद्धृदयेत्पीडितमल्पमल्पं शूलार्द्दितोऽभ्यर्द्दितपार्श्वपृष्ठः ॥
श्रान्तः सघोषं बहुशः कषायं जीर्णेऽधिकं सानिलजा वमिस्तु।
योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा ॥
सदाहचोषज्वरवक्त्रशोषमूर्च्छान्विता पित्तनिमित्तजा सा।
यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धं ॥
अभक्तरुग्गौरवसादयुक्तोवमेद्यमी सा कफकोपजा स्यात्।
सर्व्वाणि रूपाणि भवन्ति यस्यां सा सर्व्वदोषप्रभवा मता तु ॥
बीभत्सजा दौहृदजामजा च या सात्म्यतोवा क्रिमिजा च या हि।

सा पञ्चमी तांश्च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ॥
आमाशयोत्क्लेशभवास्तु सर्व्वास्तस्माद्धितं लङ्घनमेव तासु ।
शूलहृल्लासबहुला कृमिजा च विशेषतः ॥
कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ।
क्षीणस्योपद्रवैर्युक्तां सासृक्पूयां सचन्द्रिकां ॥
छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुं ।
वमीषु बहुदोषासु च्छर्दनं हितमुच्यते ॥
विरेचनं वा कुर्वीत यथादोषोच्छ्रयं भिषक् ।
संसर्गाच्चानुपूर्व्वेण यथास्वभेषजाय तान्
लघूनि परिशुष्काणि सात्म्यान्यन्नानि वाचरेत् ।
यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत् ॥
हन्यात्क्षीरघृतं पीतं छर्दिं पवनसम्भवां ।
मुद्गामलकयूषो वा ससर्प्पिष्कः ससैन्धवः ॥
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ।
पिबेदाव्यक्तमिघ्नृत्यफलाम्लं वैष्किरं रसं ॥
सुखोष्णलवणं वाच हितं स्नेहविरेचनं ।
पित्तोपशमनीयानि पानानि शिशिराणि च ॥
कषायाण्युपयुक्तानि घ्नन्ति पित्तकृतां वमीं ।
शोधनं मधुरैश्चाच द्राक्षारससमायुतैः ॥
बलवत्यां प्रशंसन्ति सर्प्पिस्तैल्वकमेव च ।
आरग्वधादिभिर्यूषं दद्याद्योगमेव च ॥

पाययेताथ सक्षौद्रं कफजायां चिकित्सकः ।
शतद्रुडूच्या विधिवत्कषायं हिमसंज्ञितं ॥
त्रिदोषजेऽपि भवेत्पथ्यं माक्षिकेण समन्वितं ।
वीभत्सजां हृद्यतमैर्द्राक्षाद्यैः काङ्क्षितैः फलैः ॥
लङ्घनैर्वमनैश्चामां सात्म्यैश्चासात्म्यकोपजां ।
कृमिहृद्रोगवच्चापि कृमिजां साधयेद्वमी ॥
विरेच्य यथादोषं ग्रस्तं विधिमनन्तरं ।
दधित्थरससंयुक्तां पिप्पलीमाक्षिकान्वितां ॥
मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रतिमुच्यते ।
समाक्षिका मधुरसा पीता वा तण्डुलाम्बुना ॥
तर्पणं वा मधुयुतं तिसृणामपि भेषजं ।
स्वयङ्गुप्तां सयष्ट्याह्वां तण्डुलाम्बुमधुद्रवां ॥
पिबेद्यवागूमथवा सिद्धां पत्रैः करञ्जजैः ।
युक्ताम्ललवणाः पिष्टाः कुस्तुम्बुर्व्योऽथवा हिता ॥
तण्डुलाम्बुयुतं खादेत्कपित्थं यूषणेन वा ।
सिताचन्दनमध्वाक्तं लिह्याद्वा मक्षिकाशकृत् ॥
पिबेत्पयोऽग्नितप्तञ्च निर्वाप्य मृद्गोपिकां ।
सर्पिःक्षौद्रयुतान् वापि लाजशक्तून्पिबेत्तथा ॥
सर्पिःक्षौद्रसितोपेतां मागधीं वा लिहेत्तथा ।
धात्रीरसं चन्दनं वा घृतं मुद्गदलाम्बु वा ॥
कोलामलकमज्जानं लिह्याद्वा त्रिसुगन्धिकं ।

सचौद्रां शालिलाजानां यवागूं वा पिबेन्नरः ॥
प्रियाण्युपहरेच्चापि मनोघ्राणसुखानि च ॥
जाङ्गलानि च मांसानि स्वादुवत्पानकानि च।
भोजनानि विचित्राणि कुर्य्यात्सर्व्वास्वतन्द्रितः ॥

---

॥ पञ्चाशत्तमोऽध्यायः ॥

अथातो हिक्काप्रतिषेधं व्याख्यास्यामः।
विदाहिगुरुविष्टम्भिरुचाभिष्यन्दिभोजनैः ॥
शीतपानाशनस्नानरजोधूमानिलानलैः।
व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः ॥
आमदोषाभिघातस्त्रीक्षयरोगप्रपीडनैः।
विषमाशनाध्यशनैस्तथा संभ्रमनैरपि ॥
हिक्का श्वासश्च कासश्च नृणां समुपजायते।
मुहुर्मुहुर्व्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाचिपन्।
सघोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केति भिषग्भिरुच्यते ॥
अन्नजां यमलां चुद्रां गम्भीरां महतीं तथा।
कफेनानुगतो वायुः पञ्च हिक्काः करोति हि ॥
मुखं कषायमरतिर्गौरवं कण्ठवचसोः।
पूर्व्वरूपाणि हिक्कानामाटोपो जठरस्य च ॥
पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः।
हिक्कयत्यूर्द्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥

चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्त्तते।
कम्पयन्ती शिरोग्रीवं यमलाख्यां विनिर्दिशेत्॥
विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्त्तते।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्प्रधाविता॥
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी।
शुष्कौष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी॥
अनेकोपद्रवयुता गम्भीरा नाम सा खला।
मर्म्माण्यापीडयन्तीव सततं या प्रवर्त्तते॥
देहमायाम्य वेगेन घोषयत्यतिव्यथतः।
महाहिक्केति सा ज्ञेया सर्व्वगात्रप्रकम्पिनी॥

आयम्यते हिक्कतोऽङ्गानि यस्य दृष्टिश्चोर्द्धं ताम्यते यस्य गाढं।
क्षीणोऽन्नद्विट् कासते यश्च हिक्की तौ द्वावन्त्यौ वर्ज्जयेद्धिक्कमानौ॥
प्राणायामोद्वेजनत्रासनानि सूचीतोदैः संभ्रमश्चाच शस्तः।
यस्याङ्गं वा माचिकेणावपीडः पिप्पल्यो वा शर्कराचूर्णयुक्ताः॥
सर्पिः कोष्णं क्षीरमिक्षोरसो वा नातिक्षीणे स्रंसनं छर्दनञ्च।
नारीपयःपिष्टमशुक्लचन्दनं घृतं सुखोष्णं च ससैन्धवं तथा॥
चूर्णीकृतं सैन्धवमम्बुना तथा निहन्ति हिक्काञ्च हितञ्च नस्यतः।
युञ्ज्याद्धूपं शालनिर्य्यासजातं नैपालं वा गोविषाणोद्भवं वा॥
सर्पिःस्निग्धैः चर्म्मवालैः कृतं वा हिक्कास्थाने स्वेदनं वापि कार्य्यं।
क्षौद्रोपेतं गैरिकं काञ्चनाख्यं लिह्याद्भस्म ग्राम्यसत्त्वास्थिजं वा॥
तद्वच्छ्वाविच्छ्वेशगोधाशल्यकानां रोमाण्यन्तर्द्धूमदग्धानि चात्र।

मध्वाज्याक्तं वहिपत्रप्रक्षेतमेवं भक्षोडुम्बरं तैल्वकंवा ॥
खर्जिचारं वीजपुराद्रसेन चौद्रोपेतं हन्ति लीढाग्र हिक्कां ।
सर्पि:स्निग्धाघ्नन्तिहिक्कां यवाग्वः कोष्णग्रासा:पायसो वा सुखोष्ण ॥
शुण्ठीतोये साधितक्षीरमाजन्तद्दत्पीतं शर्करासंयुतंवा ।
स्त्रावृष्टेर्वा सेव्यमानं निहन्याद्बाला हिक्कामाशु मूत्रं लजाय्यो:॥
सपूतिकीटं लशुनैायगन्धाहिम्वजमाचूर्णसुभावितन्तत् ॥
चैाद्रंसितां वारणकेसरञ्च पिवेद्रसेनेचुमधूकजेन ।
पिवेत्फलं वा लवणोत्तमस्य द्वाभ्यां पलाभ्यां हविष:समयं ॥
हरीतकी कोष्णजलानुपानां पिवेद्घृतं चारमधुप्रपन्नं ।
रसङ्कपित्यान्मधुपिप्पलीभ्यां पिचुप्रमाणं प्रपिवेत्सुखाय ॥
छष्णा सितां चामलकञ्च लीढं सशृङ्गवेरं मधुनाथवापि ।
कोलास्थिमज्जाञ्जनलाजचूर्णं हिक्कां निहन्यान्मधुनाथ लीढं ॥

पाटलाया: फलं पुष्पं गैरिकं कटुरोहिणी ।
खर्जूरमध्यं मागध्य: काशीशं मधुनामच ॥
चत्वारोयूपयोगा: स्यु: प्रतिपादप्रदर्शिता: ।
मधुद्वितीया: कर्त्तव्यास्ते हिक्कासु विजानता ॥

कपोतपारावतलावमत्स्यकश्यदंष्ट्रगोधाष्टपदंशजान् रसान् ।
पिवेत् फलाम्लानहिमान् ससैन्धवान्
स्निग्धांस्तथैवर्श्यमृगद्विजोद्भवान् ॥
विरेचनं पथ्यतमं ससैन्धवं घृतं सुखोष्णञ्च सितोपलायुतं ।
सदागतावूर्द्धगतेऽनुवासनं वदन्ति केचिच्च हिताय हिक्किनां ॥

॥ एकपञ्चाशत्तमोऽध्यायः ॥

अथातः श्वासप्रतिषेधं व्याख्यास्यामः ॥
यैरेव कारणैर्हिक्का बहुभिः सम्प्रवर्त्तते ।
तैरेव कारणैः श्वासो घोरो भवति देहिनां ॥
विहाय प्रकृतिं वायुः प्राणोऽथ कफसंवृतः ।
श्वासयत्यूर्द्धगो भूत्वा तं श्वासं परिचक्षते ॥
चुद्रकस्तमकश्छिन्नो महानूर्द्धश्च पञ्चधा ।
भिद्यते स महाव्याधिः श्वासएको विशेषतः ॥
प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा ।
आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च ॥
किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते ।
निषणस्यैति शान्तिञ्च स चुद्र इतिसंज्ञितः ॥
हृष्टस्वेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः ।
विशेषाद्दुर्द्दिने ताम्येच्छ्वासः स्यात्तमको मतः ॥
घोषेण महताविष्टः सकासः सकफो नरः ।
यः श्वसित्यबलोऽन्नद्विट् सुप्तस्तमकपीडितः ॥
स शाम्यति कफे हीने स्वपतश्च विवर्द्धते ।
मूर्च्छाज्वराभिभूतस्य ज्ञेयः प्रतमकस्तु सः ॥
आध्मातो दह्यमानेन वस्तिना सरुजं नरः ।
सर्व्वप्राणेन विच्छिन्नं श्वस्याच्छिन्नकमादिशेत् ॥
निःसंज्ञः पार्श्वशूलार्त्तः शुष्ककण्ठोऽतिघोषवान् ।

संरब्धनेत्रस्त्वायम्य यः श्वसात्स महान्स्मृतः ॥
मर्मस्वायम्यमानेषु श्वसन्मूढो मुहुश्च यः ।
ऊर्द्धमेवो द्धतस्वस्तमूर्द्धश्वासमादिशेत् ॥
क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ।
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च ॥
स्नेहवस्तिं विना केचिदूर्द्धञ्चाधश्च शोधनं ।
मृदुप्राणवतां श्रेष्ठं श्वासिनामादिशन्ति हि ॥
कासे श्वासे च हिक्कायां हृद्रोगे चापि पूजितं ।
घृतं पुराणं संसिद्धमभयाविडरामठैः ॥
सौवर्चलाभयाबिल्वैः संस्कृतं वा नवं घृतं ।
पिप्पल्यादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥
सपञ्चलवणं सर्पिः श्वासकासौ व्यपोहति ।
हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ॥
द्विक्षीरं साधितं सर्पिश्चतुर्गुणजलान्वितं ।
कोलमात्रैः पिवेत्तद्धि श्वासकासौ व्यपोहति ॥
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ।
दशमूले वृषकषाये वा पचेत्सर्पिश्चतुर्गुणे ॥
तन्मूलं कुसुमावापशीतं क्षौद्रेण योजयेत् ।
शृङ्गीमधुरिकाभार्गीशुण्ठीतार्च्यसिताम्बुदे. ॥
सहरिद्रैः सपथ्याह्वैः समैरावाप्य योगतः ।
घृतप्रस्थं पचेद्धीमान् शीततोये चतुर्गुणे ॥

श्वासकासांस्तथा हिक्कां सर्पिरेतन्नियच्छति।
सुवहाकालिकाभार्गीशुकाख्यानैचुलम्फलं ॥
काकादनीं शृङ्गवेरं वर्षाभूं दन्तीद्वयं।
कोलमात्रैर्घृतप्रस्थं पचेदेभिर्जलाढकं ॥
कटूष्णं पीतमेतद्धि श्वासामयविनाशनं।
सौवर्च्चलयवक्षारकटुकाव्योषचित्रकैः ॥
वचाभयाविडङ्गैश्च साधितं श्वासशान्तये।
गोपत्त्र्युदके सिद्धं स्यादन्यद्द्विगुणे घृतं ॥
तालीशतामलक्युग्राजीवन्तीकुष्ठसैन्धवैः।
बिल्वपुष्करपूतीकसौवर्चलकणाग्निभिः ॥
पथ्यातेजोवतीयुक्तैः सर्पिर्जलचतुर्गुणं।
हिङ्गुपादयुतं सिद्धं सर्व्वश्वासहरम्परं ॥
पञ्चैतानि हवींष्याहुर्भिषजः श्वासकासयोः।
वासाघृतं षट्फलञ्च घृतं चात्र हितं भवेत् ॥
तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे।
सेव्यमानं यथान्यायं श्वासकासौ व्यपोहति ॥
फलाम्ला विष्किररसाः स्निग्धाः सव्यक्तसैन्धवाः।
एणादीनां शिरोभिर्वा कौलत्था वा सुसंस्कृताः ॥
हन्युः श्वासञ्च कासञ्च संस्कृतानि पयांसि च।
तिनिशस्य च बीजानि कर्कटाख्या सुवर्चिका ॥
दुरालभाथ पिप्पल्यः कटुकाख्या हरीतकी।

श्वाविन्मयूररोमाणि कोला मागधिका कणाः ॥
भार्गीत्वक्शृङ्गवेरञ्च शर्कराशक्रकाह्वजं ।
त्रिकण्टकस्य वीजानि चूर्णितानि तु केवलं ॥
पञ्चश्लोकार्द्धिकाश्चैते लेहा ये सम्यगीरिताः ।
सर्पिर्मधुभ्यां ते लेह्याः कासश्वासार्दितैर्नरैः ॥
सप्तच्छदस्य पुष्पाणि पिप्पलीश्चापि मस्तुना ।
पिवेत्सचूर्णं मधुना धानाश्चाप्यथ भक्षयेत् ॥
अर्काङ्कुरैर्भावितानां यवानां साध्वनेकशः ।
तर्पणं वा पिवेदेषां सक्षौद्रं श्वासपीडितः ॥
शिरीषकदलीकुन्दपुष्पमागधिकायुतं ।
तण्डुलाम्बुयुतं पीत्वा जयेच्छ्वासानशेषतः ॥
कोलमज्जसालमूलश्व्यचर्मसमीमपि ।
लिह्यात्त्वाद्रेण भार्गीं वा सर्पिर्मधुसमायुतां ॥
निम्बि. कदम्बवीजं वा सक्षौद्रं तण्डुलाम्बुना ।
द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभां ॥
सर्पिर्मधुभ्यां विलिहन्हन्ति श्वासान् सुदारुणान्।
हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीं ॥
लिह्यात्तैलेन तुल्यानि श्वासार्त्तो हितभोजनः ।
गवां पुरीषस्वरसं मधुमागधिकायुतं ॥
लेहः श्वासेषु कासेषु वाजिनां वा शकृद्रस. ।
पाण्डुरोगेषु शोथेषु ये योगाः सम्प्रकीर्त्तिताः ॥

श्वासकासापहास्तेऽपि कासघ्ना ये च कीर्त्तिताः।
भार्गीलकुचूर्णं तैलं हरिद्रां कटुरोहिणीं॥
पिप्पलीं मरिचं चण्डाङ्गं गन्धद्रव्यमेव च।
तलकोटस्य बीजेषु पचेदुत्कारिकां शुभां॥
सेव्यमाना निहन्त्येषा श्वासानाशु सुदुस्तरान्।
पुराणसर्पिः पिप्पल्यः कौलत्था जाङ्गला रसाः॥
सुरासौवीरकं हिङ्गु मातुलुङ्गरसो मधु।
द्राक्षामलकबिल्वानि शस्तानि श्वासहिक्किनां॥
श्वासहिक्कापरिगतं स्निग्धः स्वेदैरुपाचरेत्।
युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथितःकफः॥
स्रोतःसु विलयं याति मारुतश्चास्य शाम्यति।
स्निग्धं ज्ञात्वा ततश्चैव भोजयित्वा रसौदनं॥
वातश्लेष्मविबन्धो वा भिषग्धूमं प्रयोजयेत्।
मनःशिलादेवदारुहरिद्राच्छदनामिषैः॥
लाक्षोरुबूकमूलैश्च कृत्वा वर्त्तीर्विधानतः।
सर्पिर्नवमधूच्छिष्टशालनिर्यासजं तथा॥
शृङ्गवालखुरस्नायुवल्कचर्म्मत्वचं गवामपि।
तुरुष्कमलकीनाञ्च गुग्गुलोः पद्मकस्य च॥
एते सर्वे सर्पिष्का धूमाः कार्य्या विजानता।
बलीयसि कफग्रस्ते वमनं सविरेचनं॥
दुर्बले चैव रूक्षे च तर्पणं हितमुच्यते।

जाङ्गलेरभ्रजैर्मांसैरानूपैर्वा सुसंस्कृतैः ॥
निदिग्धिकाखामलकप्रमाणं हिंस्रद्वययुक्तं मधुना सुयुक्तं ।
लिहन्नरः श्वासनिपीड़ितो हि श्वासं जयत्येव बलात्प्रवृद्धं ॥
यथाग्निरिद्धः खलु काष्ठसङ्घैर्वज्रं यथा वा सुरराजमुक्तं ।
रोगास्तथैते खलु दुर्निवाराः श्वासश्च कासश्च विलम्बिका च ॥

---

॥ द्विपञ्चाशत्तमोऽध्यायः ॥

अथातः कासप्रतिषेधमध्यायं व्याख्यास्यामः ॥
उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः ।
कासस्यापि च ते ज्ञेयास्त एवोत्पत्तिहेतवः ॥
धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव ॥
प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः ।
निरेति वक्त्रात्सहसा सदोषः कासः स विद्वद्भिरुदाहृतस्तु ॥
स वातपित्तप्रभवः कफाच्च क्षतात्तथान्यः क्षयजोऽपरश्च ॥
पञ्चप्रकारः कथितो भिषग्भिर्विवर्द्धितो यक्ष्मविकारकृत्स्यात् ॥
भविष्यतस्तस्य तु कण्ठकण्डूर्भोज्योपरोधो गलतालुलेपः ।
स्वशब्दवैषम्यमरोचकोऽग्निसादश्च लिङ्गानि भवन्त्यमूनि ॥
हृच्छङ्खमूर्द्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः ॥
प्रसक्तवेगस्तु समीरणेन कासेत्तु शुष्कं स्वरभेदयुक्तः ।
उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्त्तः ॥

पित्तेन पीतानि वमेत्कटूनि कासेत्स पाण्डुः परिदह्यमानः ॥
विलिप्यमानेन मुखेन सीदन्शिरोरुगार्त्तः कफपूर्णदेहः ।
अभक्तरुग्गौरवसादयुक्तः कासेद्भृशं सान्द्रकफः कफेन ॥
वक्षोऽतिमात्रं विहतञ्च यस्य व्यायामभाराध्ययनाभिघातैः ।
विश्लिष्टवक्षाः स नरःसरक्तं ष्ठीवत्यभीक्ष्णं क्षतजःस उक्तः ॥
अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ।
रूक्षस्योरः क्षतं वायुर्गृहीत्वा कासमावहेत् ॥
सपूर्व्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितं ।
कण्ठेन रुजताऽत्यर्थं विभिन्नेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः ।
पारावतइवाकूजन् कासवेगात् क्षतोद्भवात् ॥
विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नॄणां व्यापन्नेऽग्नौ त्रयो मलाः ॥
कुपिताःक्षयजं कासं कुर्य्युर्देहक्षयप्रदं ॥
स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चोपलभेत कासी ।
शुष्यन् विनिष्ठीवति दुर्ब्बलस्तु प्रक्षीणमांसो रुधिरं सपूयं ॥
तं सर्व्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति ।
हृद्रूलमासाद्य भवत्ययोर्वै याप्यन्तमाहुर्बलिनस्तु कासं ॥
शृङ्गीवचाकट्फलकतृणाब्दधान्याभयाभार्गिसराङ्गविश्वं ।

उष्णाम्बुना हिङ्गुयुतं तु पीत्वा यष्ट्याह्वमथाशु जहाति कासं ॥
फलत्रिकव्योषविडङ्गशृङ्गीरास्नावचापद्मकदेवकाष्ठैः ।
लेहः समैः क्षौद्रसिताघृताक्तः कासं निहन्यादचिरादुदीर्णं ॥
पथ्यां सितामामलकानि लाजां समागधीं चापि विचूर्ण्य शुण्ठीं ।
सर्पिर्मधुभ्यां विलिहीत कासी ससैन्धवां वोष्णजलेन पथ्यां ॥
खादेद्गुडं नागरपिप्पलीभ्यां द्राक्षाञ्च सर्पिर्मधुनावलिह्यात् ।
द्राक्षां सितां मागधिकाञ्च तुल्यां सशृङ्गवेरं मधुकन्तुगाञ्च ॥
लिह्याद्घृतक्षौद्रयुतां समांशां शितोपलां वा मरिचांशयुक्तां ।
धात्रीकणाविश्वसितोपलाश्च संचूर्ण्य मण्डेन पिबेच्च दध्नः ।
हरेणुकां मागधिकाञ्च तुल्यां दध्ना पिबेत् कासगदाभिभूतः ॥
उभे हरिद्रे सुरदारुशुण्ठीं गायत्रिसारञ्च पिबेत्समांशं ।
वस्तस्य मूत्रेण सुखाम्बुना वा दन्तीं द्रवन्तीञ्च सतिल्वकांशां ॥
भृष्टानि सर्पिष्यथ बादराणि खादेत्पलांशानि ससैन्धवानि ।
कोलप्रमाणं प्रपिबेद्धि हिङ्गु सौवीरकेणाम्लरसेन वापि ॥
क्षौद्रेण लिह्यान्मरिचाणि वापि भार्गीवचाहिङ्गुकृताञ्च वर्त्तिं ।
धूमे प्रशस्ता घृतसंप्रयुक्ता वेणुलमेलालवणैः कृता च ॥
मुस्तेङ्गुदीलक्ष्मधुकाक्षमांसीमन. शिलालैन्धगलाम्बुपिष्टैः ।
विधाय वर्त्तीः सपयोनुपानं धूमं पिबेद्वातबलासकासी ॥
पिबेच्च सीधुं मरिचान्वितं वा तेनाशु कासं प्रशममभ्युपैति ।
द्राक्षाम्बुमञ्जिष्ठपुराकयाभिः क्षीरं शृतं माक्षिकसंप्रयुक्तं ॥
निदिग्धिकानागरपिप्पलीभिः खादेच्च मुद्गान्मधुना सुसिद्धान् ।

उत्कारिकां सर्पिषि नागराढ्यां पक्वा समूत्रैस्तुटिकोलपत्रैः ॥
रभिर्निषेवेत क्षताच्च पेयां तन्वीं सुशीतां मधुना विमिश्रां ।
यत्नौक्ति सर्पिर्विहितं षडङ्गं तदातकासं जयति प्रसह्य ॥
विदारिगन्धादिक्षतं घृतं वा रसेन वा वासकजेन पक्वं ।
विरेचनं स्नैहिकमत्र चोक्तमास्थापनं चाप्यनुवासनञ्च ॥
धूमं पिबेत्स्नैहिकमप्रमत्त. पिबेत्सुखोष्णं घृतमेवचात्र ।
हिता यवान्नस्य रसेषु सिद्धाः पयांसि लेहाः सघृतास्तथैव ॥
प्रच्छर्दनं कायशिरोविरेकास्तथैव धूमाः कवलग्रहाश्च ।
उष्णाश्च लेहा. कटुकानि हन्यु. कफं विशेषेण विशोषणं वा ॥
कटुत्रिकञ्चापि वदन्ति पथ्यं घृतं क्षमित्रस्वरसे विपक्वं ॥
निर्गुण्डिपत्रस्वरसे च पक्वं सर्पि. कफोत्थं विनिहन्ति कासं ।
पाठाविडव्योषविडङ्गसिन्धुत्रिकण्टराह्वाऽतभग्नलाभि. ॥
शृङ्गीवचाम्भोधरदेवदारुदुरालभाभार्ग्यभयाशठीभि. ।
सम्यग्विपक्वं द्विगुणेन सर्प्पिर्निदिग्धिकाया. स्वरसेन चैतत् ॥
श्वासाग्निसादस्वरभेदभिन्नान्निहन्त्युदीर्णानपि पञ्च कासान् ।
विदारिगन्धोत्पलसारिवादीन्निःक्वाथ्य वर्गान् मधुकञ्च तत्र॥
घृतम्पचेदिक्षुरसाम्बुदुग्धैः काकोलिवर्गो च सशर्करं तत् ।
प्रात. पिबेत्पित्तक्षते च कासे रतिप्रसूते चयजेच कासे ॥
खर्जूरभार्गीमगधापियालमधूलिकैलामलकैस्समांशैः ।
चूर्णं सिताक्षौद्रघृतप्रगाढन्तौन्निहन्ति कासानुपयुज्यमानं ॥
रक्तां हरिद्राञ्जनवह्निपाठामूर्वापकुल्या विलिहेत्समांशाः ।

चौद्रेण कासे चतजे चयोत्थे पिवेद्धृतं चेचुरसे विपक्कं॥
चूर्णं पिबेच्चामलकस्य वापि चीरेण पक्कं सघृतं हिताशी।
चूर्णानि गोधूमयवोद्भवानि काकोलिवर्गेस्य कृतः सुसूक्ष्मः।
कासेषु पेयास्त्विषु कासवद्भिः चीरेण सचौद्रघृतेन वापि॥
गुडोदकं वा क्वथितं पिबेद्धि चौद्रेण शीतं मरिचोपदंशं।
प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्वार्द्धतुलां गुडस्य॥
चूर्णीकृतैर्ग्रन्थिकचव्यजीरव्योषेभकृष्णाहपुषाजमोदैः।
विडङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पिचुप्रमाणैः॥
दत्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत्।
तम्भचयेदचफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तं॥
अनेन सर्व्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोषाः।
शाम्यन्त्यचिरं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः॥
स्त्रीणाञ्च बन्ध्यामयनाशनः स्यात्कल्याणको नाम गुडः प्रतीतः।
द्विपञ्चमूलेभकणात्मगुप्ताभार्गीशठीपुष्करमूलविश्वान्॥
पाठामृताग्रन्थिकशङ्खपुष्पीरास्नाग्न्यपामार्गबलायवासान्।
द्विपालिकांस्तस्य यवाढकञ्च हरीतकीनाञ्च शतं गुरूणां॥
द्रोणे जलस्याढकसंयुते च क्वाथे कृते पूतचतुर्थभागे।
पचेत्तुलां शुद्धगुडस्य दत्वा पृथक्च तैलात् कुडवं घृताच्च॥
चूर्णं च तावन्मगधोद्भवाया देयञ्च तस्मिन्मधुसिद्धशीते।
रसायनात्कल्पमतोविलिह्याद्द्वे चाभये नित्यमथाशु हन्यात्॥
तद्राजयक्ष्मग्रहणी प्रदोषशोफाग्निमान्द्यस्वरभेदकासान्।

पाण्ड्वामयश्वासशिरोविकारान् हृद्रोगहिक्काविषमज्वरांश्च ॥
मेधाबलोत्साहमतिप्रदञ्च चकार चैतद्भगवानगस्त्यः ।
कुलीरशृङ्गीचटकैणलावान्निक्वाथ्य वर्गं मधुरैस्तथान्यैः ॥
पचेद्घृतं तत्तु निषेव्यमानं हन्यात् क्षतोत्थं क्षयजञ्च कासं ।
शतावरीनागबलाबलाभिर्घृतं विधेयञ्च हिताय कासिनां ॥

---

॥ त्रिपञ्चाशत्तमो ऽध्यायः ॥

अथातः स्वरभेदप्रतिषेधमध्यायं व्याख्यास्यामः ॥

अत्युच्चभाषणविषाध्ययनाभिघात
शीतादिभिः प्रकुपिताः पवनादयस्तु ।
ते शब्दवाहिधमनीषु गताः प्रतिष्ठां
हन्युः स्वरं भवति चापि हि षड्विधः सः ॥

वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गर्दभवत्खरञ्च ।
पित्तेन पीतवदनाक्षिपुरीषमूत्रो ब्रूयाद्गलेन च विदाहसमन्वितेन ॥

श्लेष्मात्मकेन सततं कफरुद्धकण्ठो
मन्दं शनैर्वदतिवापि दिवाविशेषात् ।
सर्वात्मके भवति सर्वविकारसंपदव्यक्तता च वचसस्तमसाध्यमाहुः ॥

धूयेत वाक्क्षयकृते क्षयमाप्नुयाच्च
वागेष वापि हतवाक् परिवर्ज्जनीयः ।
अन्तर्गतस्वरमबद्धपदं चिरेण मेदोऽन्वयाद्वदति दिग्धगलौष्ठतालुः
क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः ।

मेदस्विनः सर्व्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति॥
स्निग्धान्स्वरातुरनरानपकृष्टदोषान्संयोजयेदमनरेचनवस्तिभिश्च।
नस्यावपीडमुखधावनधूमलेहैः सम्पादयेच्च विविधैः कवलग्रहैश्च॥

यः श्वासकासविधिरादित एव चोक्त
स्तञ्चाप्यशेषमवतारयितुं यतेत।
वैशेषिकञ्च विधिमूर्द्धमतो वदामि
तद्वै स्वरातुरहितं निखिलं निबोध॥
स्वरोपघातेऽनिलजे भुक्तोपरि घृतं पिवेत्।
कासमर्दकवार्त्ताकमार्कवस्वरसैर्युतं॥
पीतं घृतं हन्त्यनिलं सिद्धमार्त्तगले रसे।
यवक्षाराजमोदाभ्यां चित्रकामलकेषु वा॥
देवदार्व्वग्निकाभ्यां वा सिद्धमाज्यं समाचिकं।
सुखोदकानुपानो वा सर्प्पिःस्नेहो गुडौदनः॥
क्षीरानुपानं पित्ते तु पिवेत्सर्प्पिरतन्द्रितः।
श्लेष्मणीयाच सर्प्पिष्कं यष्टीमधुकपायसं॥ *
लिह्यान्मधुरकाणां वा चूर्णं मधुघृताप्लुतं।
शतावरीचूर्णयोगं बलाचूर्णमथापि वा॥
पिवेत्कटूनि मूत्रेण कफजे स्वरसङ्क्षये।
विह्यादा मधुतैलाभ्यां भुक्त्वा खादेत् कटूनि च॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते।
सर्व्वजे चापि सर्व्वेण प्रत्याख्यायाचरेत क्रियां॥

शर्करामधुमिश्राणि शृतानि मधुरैःसह ।
पिबेत्पयांसि यष्ट्याह्वैर्वेदतोऽभिहतः स्वरः ॥

॥ चतुःपञ्चाशत्तमोऽध्यायः ॥

अथातः कृमिरोगमध्यायं व्याख्यास्यामः ।
अजीर्णाध्यशनासात्म्यैर्विरुद्धमलिनाशनैः ॥
अव्यायामदिवास्वप्नगुर्व्वतिस्निग्धशीतलैः ।
माषपिष्टान्नविदलविसशालूककेरुकैः ॥
पर्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः ।
पललानूपपिशितपिण्याकपृथुकादिभिः ॥
स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति ।
कृमीन् बहुविधाकारान् करोति विविधाश्रयान् ॥
आमपक्वाशयस्तेषां प्रसवः प्रायशः स्मृतः ।
विंशतेः कृमिजातीनां त्रिविधः सम्भवः स्मृतः ।
पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणं ॥
अजवाविजवाः किप्याश्चिप्या गण्डूपदास्तथा ।
चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः ॥
श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च ।
तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि ॥
शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसङ्क्षयाः ।
प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः ॥

रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः ।
शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते ॥
दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ।
पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ॥
रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः ।
रूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा ॥
मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजस्तथा ।
शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते ॥
केशरोमनखादाश्च दन्तादाः किक्किशास्तथा ।
कुष्ठजाश्च परीसर्प्पा ज्ञेयाः शोणितसम्भवाः ॥
ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा ।
रक्ताधिष्ठानजान् प्रायोविकारान् जनयन्ति ते ॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ।
ज्वरो विवर्णता शूलं हृद्रोग. सदनं भ्रमः ॥
भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणं ।
दृश्यास्तयोद्दशाद्यास्तु क्रमीणां परिकीर्त्तिताः ॥
केशादास्तु त्वदृश्यास्ते द्वावाद्यौ परिवर्जयेत् ।
एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरं ॥
सुरसादिविपक्वेन सर्पिषा वान्तमादितः ।

विरेचयेत्तीक्ष्णतरैर्योगैरास्थापयेच्च तं ॥
यवकोलकुलत्थानां सुरसादेर्गणस्य च ।
विडङ्गस्नेहयुक्तेन क्वाथेन लवणेन च ॥
प्रत्यागते निरूहे तु नरं स्नातं सुखाम्बुना ।
भुञ्जानं क्रिमिघ्नैरशनैस्ततः शीघ्रं भिषग्वरः ॥
स्नेहेनोक्तेन चैनन्तु योजयेत्स्नेहवस्तिना ।
ततः शिरीषकिणिहीरसं क्षौद्रयुतं पिबेत् ।
केवूकस्वरसं वापि पूर्व्ववत्तीक्ष्णभोजनः ॥
पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना ।
पारिभद्रकपत्राणां क्षौद्रेण स्वरसं पिबेत् ॥
पत्तूरस्वरसं वापि पिबेद्वा सुरसादिजं ।
लिह्यादश्वशकृच्चूर्णं विडङ्गं वा समाक्षिकं ॥
पत्रैर्मूषिकपर्ण्या वा सुपिष्टैः पिष्टमिश्रितैः ।
खादेत्पूपालिकान् पक्वान् धान्याम्लञ्च पिबेदनु ॥
सुरसादिगणे तैलं पक्वं वा पानमिष्यते ।
विडङ्गचूर्णपिष्टाभ्यां तस्मिन् भक्ष्यन्तु कारयेत् ॥
तत्कषायमपीतानां तिलानां स्नेहमेव वा ॥
श्वाविधः शकृतश्चूर्णं सप्तकृत्वः सुभावितं ।
विडङ्गानां कषायेण त्रैफलेन तथैव च ॥
क्षौद्रेण लिह्यान्नु पिबेद्रसमामलकोद्भवं ।
भल्लातकास्थीन्यथवा तुम्बुरूण्यथवा पुनः ।

